**Roll No.** | | | | | | | | |

(Write Roll Number from left side exactly as in the Admit Card)

*Signature of Invigilator*

**Question Booklet Series** **X**

**PAPER–II** **Question Booklet No.**

(Identical with OMR Answer Sheet Number)

**Subject Code : 03**

# SANSKRIT

*Time : 2 Hours* *Maximum Marks: 200*

***Instructions for the Candidates***

1. Write your Roll Number in the space provided on the top of this page as well as on the OMR Sheet provided.
2. At the commencement of the examination, the question booklet will be given to you. In the first 5 (five) minutes, you are requested to open the booklet and verify it:
   (i) To have access to the Question Booklet, tear off the paper seal on the edge of this cover page.
   (ii) Faulty booklet, if detected, should be got replaced immediately by a correct booklet from the invigilator within the period of 5 minutes. Afterwards, neither the Question Booklet will be replaced nor any extra time will be given.
   (iii) Verify whether the Question Booklet No. is identical with OMR Answer Sheet No.; if not, the full set is to be replaced.
   (iv) After this verification is over, the Question Booklet Series and Question Booklet Number should be entered on the OMR Sheet.
3. This paper consists of One Hundred (100) multiple-choice type questions. All the questions are compulsory. Each question carries *two* marks.
4. Each Question has four alternative responses marked: (A) (B) (C) (D) . You have to darken the circle as indicated below on the correct response against each question.
   *Example:* (A) (B) ● (D) , where (C) is the correct response.
5. Your responses to the questions are to be indicated correctly in the OMR Sheet. If you mark your response at any place other than in the circle in the OMR Sheet, it will not be evaluated.
6. Rough work is to be done at the end of this booklet.
7. If you write your Name, Phone Number or put any mark on any part of the OMR Sheet, except in the space allotted for the relevant entries, which may disclose your identity or use abusive language or employ any other unfair means, such as change of response by scratching or using white fluid, you will render yourself liable to disqualification.
8. Do not tamper or fold the OMR Sheet in any way. If you do so, your OMR Sheet will not be evaluated.
9. You have to return the Original OMR Sheet to the invigilator at the end of the examination compulsorily and must not carry it with you outside the Examination Hall. You are, however, allowed to carry question booklet and duplicate copy of OMR Sheet after completion of examination.
10. **Use only Black Ball point pen.**
11. **Use of any calculator, mobile phone, electronic devices/gadgets etc. is strictly prohibited.**
12. **There is no negative marks for incorrect answer.**

***परीक्षार्थिनां कृते निर्देशावली***

1. एतत्पत्रोपरि समं च प्रदत्ते OMR-पत्रमध्ये निर्दिष्टस्थले भवतः/भवत्या क्रमसंख्या लेख्या।
2. परीक्षारम्भे प्रश्नपुस्तिका भवते/भवत्यै प्रदास्यते। प्रथमनिमेषपञ्चके पुस्तिकामुद्धाटयितुं तथा एतस्य याथार्थ्यं परीक्षितुं भवान्/भवती अनुरुध्यते।
   (a) प्रश्नपुस्तिकाभ्यन्तरं द्रष्टुम् एतत्प्रच्छदपत्रस्य प्रान्तभागोपरिस्थिता पत्रमुद्रा छेदनीया।
   (b) त्रुटियुक्ता पुस्तिका दृष्टा चेत् परीक्षानिरीक्षकात् प्राप्तया शुद्धपुस्तिकया अविलम्बेन पञ्चनिमेषमध्ये सा प्रतिस्थापनीया। ततः परं प्रश्नपुस्तिकाप्रतिस्थापनं न भवेत्, नापि च अतिरिक्तः समयः प्रदास्यते।
   (c) प्रश्नपुस्तिकासंख्या OMR-उत्तरपत्रसंख्यानुरूपा न वेति परीक्षणीयम्। न चेत् सम्पूर्णः गुच्छः प्रतिस्थापनीयः।
   (d) यथार्थतापरीक्षावसाने प्रश्नपुस्तिकाश्रेणीसंख्या तथा प्रश्नपुस्तिकासंख्या OMR-पत्रमध्ये निवेशनीया।
3. पत्रमिदं शतसंख्यकबहुचयनीयविकल्पोत्तरकप्रश्नसमन्वितम्। सर्वे प्रश्नाः अवश्यमुत्तरणीयाः। प्रत्येकं प्रश्नः अङ्कद्वयमानकः।
4. प्रत्येकं प्रश्नस्य चत्वारः उत्तरविकल्पाः सन्ति। ते हि (A) (B) (C) (D) इत्येवं चिह्निताः। प्रत्येकं प्रश्नस्य कृते शुद्धोत्तरसमन्वितं वृत्तम् अधोदर्शितरीत्या कृष्णीकर्तव्यम्। उदाहरणम्: (A) (B) ● (D) , यत्र (C) इति शुद्धोत्तरम्।
5. प्रतिप्रश्नं भवदुत्तरं यथायथतया OMR-पत्रमध्ये निर्देष्टव्यम्। OMR-पत्रमध्ये निर्दिष्टवृत्तमतिरिच्य अन्यत्र कुत्रापि भवदुत्तरं निधीयते चेत् तत् परीक्षार्थं विवेचितं न स्यात्।
6. आवश्यकत्वे सति उत्तरस्य स्थूलरूपनिर्माणानुकूलं कार्यं पुस्तिकायाः अन्तिमभागे विधातव्यम्।
7. प्रासङ्गिकतथ्योल्लेखाय निर्दिष्टं स्थानं विहाय OMR-पत्रमध्ये अन्यत्र कुत्रापि भवतः/भवत्याः नाम दूरभाषसंख्या अन्यत् वा किमपि भवत्परिचयप्रकाशकं चिह्नं भवता/भवत्या निधीयते चेत्, निन्दनीया भाषा वा प्रयुज्यते चेत्, नखघर्षणेन श्वेतद्रवेण वा उत्तरपरिवर्तनम् इत्येवंरूपः कोऽप्यन्यः असदुपायः वा उपयुज्यते चेत् भवान्/भवती स्वयमेव स्वायोग्यतां सूचयिष्यति।
8. OMR-पत्रं न कथमपि विकर्तव्यं नापि वा भङ्ग्या पुटीकर्तव्यम्। एवं क्रियते चेत् भवतः/भवत्याः OMR-पत्रं न परीक्षिष्यते।
9. परीक्षावसाने भवता/भवत्या अवश्यमेव भवदीयं प्रकृतं OMR-पत्रं परीक्षानिरीक्षकाय प्रत्यर्पणीयम्। परीक्षाप्रकोष्ठात् बहिस्तु तद् आत्मना सह नैव नेतव्यम्। परं परीक्षासमाप्तेरनन्तरं प्रश्नपुस्तिकां तथा OMR-पत्रस्य अनुलिपिं नेतुमनुमतिरस्ति।
10. **केवलं वर्त्तुलाग्रा कृष्णमसिः लेखनी उपयोक्तव्या।**
11. **गणकयन्त्रम्, दूरभाषयन्त्रम्, यत् किमपि वैद्युतिकयन्त्रम् इत्यादेः उपयोगः कठोरतया प्रतिषिद्धः।**
12. **असदुत्तरहेतोः अङ्कवियोजननीतिर्नास्ति।**

**PAPER II**

**(SANSKRIT)**

1. ताण्ड्यमहाब्राह्मणं सम्बद्धमस्ति
   (A) ऋग्वेदेन
   (B) यजुर्वेदेन
   (C) सामवेदेन
   (D) अथर्ववेदेन

2. 'ब्रह्मवेद' इत्यभिधानेन अभिहित: वेद: क:?
   (A) ऋग्वेद:
   (B) सामवेद:
   (C) अथर्ववेद:
   (D) यजुर्वेद:

3. जैमिनीयब्राह्मणस्य नामान्तरमस्ति
   (A) वंशब्राह्मणम्
   (B) षड्विंशब्राह्मणम्
   (C) तलवकारब्राह्मणम्
   (D) कपिष्ठलब्राह्मणम्

4. यजुर्वेदस्य आरण्यकम् न अस्ति
   (A) बृहदारण्यकम्
   (B) तैत्तिरीयारण्यकम्
   (C) तलवकारारण्यकम्
   (D) मैत्रायण्यारण्यकम्

5. 'सत्यं बृहदृतमुग्रम्...' इति मन्त्र: कस्मिन् सूक्ते विद्यते?
   (A) अग्निसूक्ते
   (B) इन्द्रसूक्ते
   (C) वायुसूक्ते
   (D) पृथिवीसूक्ते

6. अनुस्वारस्यकृते मकारस्य प्रयोग: भवति
   (A) पदपाठे
   (B) विग्रहे
   (C) संहितापाठे
   (D) मूलपाठे

7. सन्ध्यक्षराणि कति सन्ति?
   (A) द्वे
   (B) त्रीणि
   (C) चत्वारि
   (D) पञ्च

8. 'वाङ्मनसाख्यानं' कस्मिन् ब्राह्मणे प्राप्यते?
   (A) शतपथब्राह्मणे
   (B) गोपथब्राह्मणे
   (C) ऐतरेयब्राह्मणे
   (D) तैत्तिरीयब्राह्मणे

9. यास्कानुसारत: आख्यातलक्षणं भवति
   (A) सत्त्वप्रधानम्
   (B) भावप्रधानम्
   (C) अर्थप्रधानम्
   (D) शब्दप्रधानम्

10. पिङ्गलच्छन्द:सूत्रानुसारत: जगतीछन्दस: अक्षराणि सामान्यत: भवन्ति
   (A) 36
   (B) 40
   (C) 44
   (D) 48

11. 'चतुरध्यायिका' इति प्रातिशाख्यग्रन्थो भवति
(A) ऋग्वेदस्य
(B) सामवेदस्य
(C) शुक्लयजुर्वेदस्य
(D) अथर्ववेदस्य

12. 'उत त्वः पश्यन् न ददर्श वाचम् ...' इति ऋक् उपलभ्यते ऋग्वेदस्य
(A) पुरुषसूक्ते (10·90)
(B) ज्ञानसूक्ते (10·71)
(C) हिरण्यगर्भसूक्ते (10·121)
(D) वरुणसूक्ते (7·89)

13. ऋग्वेदीये अक्षसूक्ते ऋषिर्भवति
(A) वैश्वामित्रो मधुच्छन्दाः
(B) कुत्सः
(C) ऐलुषःकवषः
(D) बार्हस्पत्यो भरद्वाजः

14. उपनिषत्सु ब्रह्मस्वरूपबोधकं पदम्
(A) ईश्वरः
(B) आनन्दम्
(C) ब्रह्मा
(D) प्राज्ञः

15. यास्कमते वैदिकपदं कतिविधम्?
(A) त्रिविधम्
(B) द्विविधम्
(C) चतुर्विधम्
(D) पञ्चविधम्

16. किमाख्यो यागविशेषः कठोपनिषदि उद्दालकेनानुष्ठितः?
(A) अग्निष्टोमः
(B) विश्वजित्
(C) दर्शपूर्णमासः
(D) राजसूयः

17. कस्य वेदस्य कोऽप्यारण्यकग्रन्थो नास्ति?
(A) ऋग्वेदस्य
(B) सामवेदस्य
(C) यजुर्वेदस्य
(D) अथर्ववेदस्य

18. ज्ञानकर्मोपासनानां समन्वयः कुत्र समुपलभ्यते?
(A) कठोपनिषदि
(B) प्रश्नोपनिषदि
(C) केनोपनिषदि
(D) ईशावास्योपनिषदि

19. षड्भावविकारेषु कस्य परिगणनं न भवति?
(A) जायते
(B) वर्धते
(C) विपरिणमते
(D) पराजयते

20. कल्प इति वेदपुरुषस्य किम् अङ्गं भवति?
(A) पादौ
(B) नासिका
(C) हस्तौ
(D) कर्णौ

**21.** तन्तुसंयोग: पदस्य किं कारणम्?
(A) समवायिकारणम्
(B) असमवायिकारणम्
(C) निमित्तकारणम्
(D) नित्यकारणम्

**22.** नामजात्यादिविशेषणविशेष्य-सम्बन्धावगाहित्वम्
(A) सगुणत्वम्
(B) द्रव्यत्वम्
(C) निर्विकल्पकत्वम्
(D) सविकल्पकत्वम्

**23.** काल: न्यायमते कतिविध:?
(A) त्रिविध:
(B) बहुविध:
(C) एक:
(D) द्विविध:

**24.** जलीयं शरीरं कस्मिन् लोके अस्ति?
(A) आदित्यलोके
(B) सरसि
(C) वरुणलोके
(D) पृथिव्याम्

**25.** पटरूपस्य किमसमवायिकारणं भवति?
(A) तन्तुपरमाणुसंयोग:
(B) तन्तुसंयोग:
(C) तन्तुरूपम्
(D) तन्तुपरमाणुरूपम्

**26.** बाधितहेत्वाभासस्य किमुदाहरणम्?
(A) वह्निरुष्णो तैजसत्वात्
(B) वह्निरनुष्णो द्रव्यत्वात्
(C) पर्वतो वह्निमान् धूमवत्त्वात्
(D) त्रिषु किमपि न

**27.** संस्कार: कस्मिन् अन्तर्भवति?
(A) द्रव्ये
(B) गुणे
(C) कर्मणि
(D) स्मृतौ

**28.** का नाम योग्यता?
(A) पदानामर्थाबाध:
(B) पदानामविलम्बेनोच्चारणम्
(C) प्रतिभासम्पन्नता
(D) कार्यदक्षता

**29.** किं नाम शाब्दज्ञानम्?
(A) वाक्यज्ञानम्
(B) शब्दज्ञानम्
(C) वाक्यार्थज्ञानम्
(D) प्रकृतिप्रत्ययज्ञानम्

**30.** एकत्वादिव्यवहारहेतु: का?
(A) दिक्
(B) पृथिवी
(C) बुद्धि:
(D) संख्या

**31.** कस्मात् समाधिसिद्धिः?
(A) ब्रह्मचर्यात्
(B) सन्तोषात्
(C) स्वाध्यायात्
(D) ईश्वरप्रणिधानात्

**32.** स्वविषयासम्प्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणाम्
(A) प्रत्याहारः
(B) चित्तभूमिः
(C) चित्तवृत्तिः
(D) धारणा

**33.** हेमचन्द्रसूरिः कस्य दर्शनस्य आचार्योऽस्ति?
(A) बौद्धदर्शनस्य
(B) जैनदर्शनस्य
(C) चार्वाकदर्शनस्य
(D) सांख्यदर्शनस्य

**34.** मोक्षसाधनेषु त्रिरत्नेषु परिगणितम् नास्ति
(A) सम्यक्दर्शनम्
(B) सम्यक्ज्ञानम्
(C) सम्यक्वार्ता
(D) सम्यक्चारित्रम्

**35.** अनिर्वचनीयशब्दस्यार्थः कः?
(A) सद्भिन्नत्वम्
(B) असद्भिन्नत्वम्
(C) सदसद्भिन्नत्वम्
(D) उभयरूपत्वम्

**36.** षट्सम्पत्तिमध्ये कस्य गणना न भवति?
(A) मोक्षेच्छायाः
(B) तितिक्षायाः
(C) समाधानस्य
(D) श्रद्धायाः

**37.** सांख्यदर्शनानुसारेण कः पदार्थः जडो न?
(A) प्रकृतिः
(B) पुरुषः
(C) पञ्चमहाभूतानि
(D) अन्तःकरणम्

**38.** प्रकृतेः कतमो गुणः उपष्टम्भकश्चलश्च?
(A) सत्त्वम्
(B) रजः
(C) तमः
(D) सप्तरूपाणि

**39.** तैजसः अहङ्कारः केन गुणेन सम्बद्धः?
(A) तमसा
(B) सत्त्वेन
(C) रजसा
(D) न केनापि

**40.** संज्ञासंज्ञिसम्बन्धज्ञानं तर्कसंग्रहे किमुच्यते?
(A) प्रत्यक्षम्
(B) स्मरणम्
(C) उपमितिः
(D) अर्थापत्तिः

**41.** *dhedhēmi इति इन्दोयुरोपीयशब्दस्य संस्कृतरूपं भवति

(A) दाधामि

(B) दधामि

(C) ददामि

(D) न किमपि

**42.** भकारस्य बकारादेशो भवति अनेन ध्वनिसूत्रेण

(A) ग्रिम्–ध्वनिसूत्रेण

(B) ग्रास्मान्–ध्वनिसूत्रेण

(C) वेर्नेर्–ध्वनिसूत्रेण

(D) कोलित्स्–ध्वनिसूत्रेण

**43.** 'व' इति ध्वनिर्भवति

(A) प्रतिवेष्टितः

(B) दन्त्यौष्ठ्यः

(C) दन्तमूलीयः

(D) रणितः

**44.** इन्दोयुरोपीयभाषापरिवारे न विद्यते

(A) ग्रीक्भाषा

(B) जार्मानिक्भाषा

(C) तामिलभाषा

(D) केलटिक्भाषा

**45.** 'लक्ष्यलक्षणे व्याकरणम्'– अत्र लक्ष्यलक्षणे इत्यत्र का विभक्तिः?

(A) द्वितीया

(B) सप्तमी

(C) प्रथमा

(D) उक्तासु तिसृषु विभक्तिषु या कापि

**46.** 'आख्यातोपयोगे' इत्यनेन अपादानसंज्ञा भवति कस्य?

(A) आख्यातस्य

(B) आख्याताया:

(C) आख्याया:

(D) आख्यातु:

**47.** 'हलोऽनन्तरा: संयोग:' इत्यत्र 'अनन्तरा:' इत्यस्य अर्थ: क:?

(A) न अन्तरा:

(B) न अन्त:

(C) अविद्यमानम् अन्तरं येषाम्

(D) अविद्यमानम् अन्त: येषाम्

**48.** 'द्वन्द्वे घि' इत्यत्र 'घि' इति

(A) प्रथमा

(B) द्वितीया

(C) सप्तमी

(D) चतुर्थी

**49.** अध:स्थितेषु कस्मिन् अर्थे धातोरुत्तरं यङ् न स्यात्?

(A) पुन: पुन: गच्छति

(B) कुटिलं गच्छति

(C) अतिशयेन कुटिलं व्रजति

(D) वक्रं व्रजति

**50.** 'राम: तण्डूलै: स्थाल्याम् ओदनं पचति'– इत्यत्र पाकस्य साक्षात् आधार:

(A) तण्डूला:

(B) स्थाली

(C) ओदन:

(D) राम:

**[ Please Turn Over ]**

51. 'अचोऽन्त्यादि टि' इत्यत्र 'अन्त्यादि' इत्यस्यार्थः
(A) अन्त्यः आदिर्यस्य तत्
(B) अन्त्यः आदिर्यस्य सः
(C) अन्त्यः आदिः
(D) अन्त्यम् आदि

52. 'अधिशीङ्स्थासां कर्म' इत्यत्र 'अधिशीङ् स्थासाम्' इत्यस्य निष्पत्तौ कः समासः नाश्रितः?
(A) बहुव्रीहिः
(B) द्वन्द्वः
(C) शाकपार्थिवादिवत् समासः
(D) अव्ययीभावः

53. 'त्रयोऽस्य पादाः' इत्यनेन केषां बोधः भवति?
(A) प्रथम-मध्यमोत्तम-पुरुषाणाम्
(B) उरः-कण्ठ-शिरसाम्
(C) एकवचन-द्विवचन-बहुवचनानाम्
(D) भूत-भविष्यद्-वर्तमान-कालानाम्

54. 'यू स्त्र्याख्यौ नदी' इत्यत्र 'यू' इत्यस्य सिद्धिविषये अधो धृतेषु मतेषु किं साधु?
(A) अत्र 'अकः सवर्णे दीर्घः' इति सूत्रेण सन्धिः
(B) अत्र 'इको यणचि' इति सूत्रेण सन्धिः
(C) अत्र सन्धिरेव नास्ति
(D) निपातने सिद्धोऽयं प्रयोगः

55. 'ग्रामं गच्छन् तृणं स्पृशति' इत्यत्र तृणस्य कर्मसंज्ञाविधायकं सूत्रं किम्?
(A) कर्तृकर्मणोः कृति
(B) तथायुक्तं चानीप्सितम्
(C) कर्मणि द्वितीया
(D) अकथितं च

56. 'वि-पराभ्यां जेः' इति सूत्रेण किं रूपं निर्दिश्यते?
(A) विजयति
(B) जयते
(C) विजयते
(D) जयति

57. सवर्णसंज्ञायां कयोः तुल्यता अपेक्ष्यते?
(A) स्थान-बाह्यप्रयत्नयोः
(B) स्थानाभ्यन्तरप्रयत्नयोः
(C) आभ्यन्तरप्रयत्न-बाह्यप्रयत्नयोः
(D) ययोः कयोश्चिद् द्वयोः स्थानयोः

58. 'परः सन्निकर्षः संहिता इति सूत्रानुसारेण संहितायां केषाम् अतिशयितः सन्निधिः भवति?
(A) वाक्यानाम्
(B) पदानाम्
(C) अर्थानाम्
(D) वर्णानाम्

59. समासेषु पतिशब्दस्य का संज्ञा?
(A) घि
(B) नदी
(C) भम्
(D) घम्

60. अव्ययीभावसमासनिष्पन्न-प्रतिदिनशब्दात् विविधविभक्तिषु यानि रूपाणि अधो दत्तानि तेषु किं न शुद्धम्?
(A) प्रतिदिनेन
(B) प्रतिदिनात्
(C) प्रतिदिनस्य
(D) प्रतिदिने

**61.** उत्तररामचरिते श्रीराम: कीदृशो नायक:?
(A) धीरप्रशान्त:
(B) धीरोद्धत:
(C) धीरललित:
(D) धीरोदात्त:

**62.** 'नसमरसला ग: षड्वेदैर्हयै' रिति कस्य छन्दस: लक्षणम्?
(A) हरिण्या:
(B) स्रग्धराया:
(C) शार्दूलविक्रीडितस्य
(D) शिखरिण्या:

**63.** पञ्चभि: श्लोकैर्भवति
(A) मुक्तकम्
(B) कुलकम्
(C) कोष:
(D) कलापकम्

**64.** प्रतीहारपालिका शोणोत्तरा एषु कस्मिन् दृश्यकाव्ये उपलब्धा?
(A) मृच्छकटिके
(B) मुद्राराक्षसे
(C) उत्तररामचरिते
(D) विक्रमोर्वशीये

**65.** 'अग्निहोत्रं जुहोति' इति कीदृश: विधि:?
(A) उत्पत्तिविधि:
(B) विनियोगविधि:
(C) अधिकारविधि:
(D) प्रयोगविधि:

**66.** मम्मटमते गुणीभूतव्यङ्ग्यस्य कति भेदा:?
(A) अष्टौ
(B) सप्त
(C) पञ्च
(D) त्रय:

**67.** शिवराजविजयकाव्यस्य रचयिता क:?
(A) अम्बिकादत्तव्यास:
(B) पण्डिता क्षमाराव:
(C) वेङ्कटरमणराघवन्
(D) श्रीजीवन्यायतीर्थ:

**68.** आरिस्ततल्–प्रचारितं तत्त्वं ज्ञायतेऽनेन नाम्ना
(A) Pedagogism
(B) Mysticism
(C) Hedonism
(D) Skepticism

**69.** तपोधनं वेत्सि न मामुपस्थितम्–इत्यत्र तपोधनपदेन क: गृह्यते?
(A) कण्व:
(B) दुर्वासा:
(C) विश्वामित्र:
(D) गौतम:

**70.** कारणे सति कार्याभाव: भवति चेत् क: अलङ्कार:?
(A) विभावना
(B) विशेषोक्ति:
(C) निदर्शना
(D) संसृष्टि:

[ Please Turn Over ]

**71.** औचित्यसम्प्रदायस्य प्रवर्तकः आचार्यः कः?
(A) वामनः
(B) क्षेमेन्द्रः
(C) कुन्तकः
(D) रुद्रटः

**72.** शिवेतरक्षतये इत्यस्य कोऽर्थः?
(A) शिवस्य इतरक्षतये
(B) शिवेतस्य रक्षतये
(C) शिवस्य इतरस्य क्षतये
(D) शिवात् इतरस्य क्षतये

**73.** आत्मानं वाल्मीकेः अवतारं मन्यते
(A) दण्डी
(B) वामनः
(C) राजशेखरः
(D) मम्मटः

**74.** सञ्चारिभावः कस्य नामान्तरमस्ति?
(A) विभावस्य
(B) अनुभावस्य
(C) व्यभिचारिभावस्य
(D) भावस्य

**75.** आनन्दवर्धनमते मधुरतमः रसः कः?
(A) करुणरसः
(B) विप्रलम्भशृङ्गाररसः
(C) सम्भोगशृङ्गाररसः
(D) हास्यरसः

**76.** 'काले वारिधराणामपतितया नैव शक्यते स्थातुम्' इति अपह्नुत्यलङ्कारे गोपनीयार्थद्योतनं केन समासेन भवति?
(A) तत्पुरुषसमासेन
(B) कर्मधारयसमासेन
(C) बहुव्रीहिसमासेन
(D) अव्ययीभावसमासेन

**77.** कथामुक्तावली कस्य रचना वर्तते?
(A) अम्बिकादत्तव्यासस्य
(B) श्रीधरभास्करबर्णेकरस्य
(C) भी. राघवनस्य
(D) पण्डिता क्षमाराव इत्यस्याः

**78.** 'क्रियासु युक्तैर्नृप चारचक्षुषो न वञ्चनीयाः प्रभवोऽनुजीविभिः'– इह 'चारचक्षुषः' इत्यत्र कीदृशी लक्षणा?
(A) रूढावुपादानलक्षणा सारोपा गौणी
(B) प्रयोजने लक्षणलक्षणा सारोपा गौणी
(C) रूढौ लक्षणलक्षणा साध्यवसाना शुद्धा
(D) प्रयोजने उपादानलक्षणा साध्यवसाना शुद्धा

**79.** 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इत्यत्र 'सगुरवः इति बहुवचनान्तं पदम्। तद्द्वारा छन्दसि अस्मिन् कति 'गुरवः' बोध्यन्ते?
(A) एकः गुरूः
(B) द्वौ गुरू
(C) त्रयो गुरवः
(D) त्र्यधिकाः गुरवः

**80.** अन्विताभिधानवादिमते वाक्यार्थः कया वृत्त्या बोध्यते?
(A) अभिधया
(B) लक्षणया
(C) व्यञ्जनया
(D) तात्पर्यवृत्त्या

**81.** अधोलिखितेषु इदं शैवम्
(A) वराहपुराणम्
(B) भागवतपुराणम्
(C) मार्कण्डेयपुराणम्
(D) कूर्मपुराणम्

**82.** यन्नेहास्ति न तत् क्वचित्–इति केन सम्बद्धम्?
(A) उपनिषदा
(B) पुराणेन
(C) महाभारतेन
(D) स्मृतिग्रन्थैः

**83.** 'कारुकरक्षणम्' सम्बद्धमस्ति
(A) तम्बुनिर्माणेन
(B) विवादनिर्णयेन
(C) प्रजारक्षणेन
(D) जनपदस्थापनेन

**84.** नलोपाख्यानम् महाभारतस्य कस्मिन् पर्वणि विद्यते?
(A) सभापर्वणि
(B) वनपर्वणि
(C) आदिपर्वणि
(D) भीष्मपर्वणि

**85.** रामोपाख्यानं कुत्र विद्यते?
(A) नैषधचरिते
(B) किरातार्जुनीये
(C) महाभारते
(D) शिशुपालवधे

**86.** 'अहिंसा परमो धर्मः' सूक्तिरियं कुतः उद्धृतास्ति?
(A) विष्णुपुराणात्
(B) महाभारतात्
(C) रामायणात्
(D) बालरामायणात्

**87.** किमुपजीव्यं रामायणस्य?
(A) वेणीसंहारम्
(B) शिशुपालवधम्
(C) भट्टिकाव्यम्
(D) नैषधचरितम्

**88.** पुराणेषु भारतवर्षस्य कति कुलाचलाः?
(A) सप्त
(B) पञ्च
(C) दश
(D) नव

**89.** महाभारतं राज्ञे जनमेजयाय केन कथितम्?
(A) व्यासेन
(B) वैशम्पायनेन
(C) मार्कण्डेयेन
(D) लोमहर्षणेन

**90.** हरिवंशपुराणं महाभारतस्य
(A) अनुक्रमणिका
(B) पर्वरूपम्
(C) खिलरूपम्
(D) पर्वाध्यायरूपम्

**91.** सबन्धके ऋणे याज्ञवल्क्येन कियत्परिमाणा वृद्धिरुक्ता?

(A) सप्ततिभाग:

(B) पञ्चाशद्भाग:

(C) अशीतिभाग:

(D) नवतिभाग:

**92.** ब्युलर्-महोदयेन एते वर्णा: गुप्तब्राह्म्या: लिपे: पूर्वक्षेत्रीय-पश्चिमक्षेत्रीयो-पभेदद्वयस्य विभेदका इति निर्णीतम्

(A) म-स-षा:

(B) ल-ष-हा:

(C) क-र-गा:

(D) ल-श-हा:

**93.** 'तज्जावेतावुभौ गणौ'– व्यसनप्रसङ्गे विहितायामस्यां मनूक्तौ तदिति सर्वनाम्ना कस्य निर्देश:?

(A) कामस्य

(B) क्रोधस्य

(C) लोभस्य

(D) मोहस्य

**94.** 'अन्त:संज्ञा भवन्त्येते सुखदु:खसमन्विता:'– अत्र 'एते' इति सर्वनाम्ना केषां परिग्रह:?

(A) वृक्षाणाम्

(B) मनुष्याणाम्

(C) सिंहानाम्

(D) अण्डानाम्

**95.** कौटिल्यमतेन अमात्यसंपद: कति?

(A) चतुर्दश

(B) पञ्चदश

(C) पञ्चविंशति:

(D) विंशति:

**96.** विषयुक्तस्य रसस्य मध्ये कीदृशी राजी दृश्यते?

(A) नीला

(B) ताम्रा

(C) काली

(D) श्यामा

**97.** ये गूढपुरुषा: बन्धुषु नि:स्नेहा: क्रूरा अलसाश्च ते

(A) तीक्ष्णा:

(B) रसदा:

(C) कापटिका:

(D) मुण्डा:

**98.** आङ्गलभाषाश्रिते 'एपिग्राफि' शब्दे 'एपि' इत्यस्य कोऽर्थ:?

(A) अध:

(B) उपरि

(C) पार्श्वत:

(D) उभयत:

**99.** अशोकस्य प्रथममुख्यशिलानुशासनं यदा उत्कीर्णं तदा कति प्राणिनो महानसे हन्यन्ते स्म सूपार्थाय?

(A) चत्वार:

(B) पञ्च

(C) त्रय:

(D) षट्

**100.** प्रथमकणिष्कस्य तृतीये राज्यवर्षे उत्कीर्णे सारनाथबोधिसत्त्वप्रतिमाभिलेखे केन भिक्षुणा बोधिसत्त्व:प्रतिष्ठापित:?

(A) बलेन

(B) सङ्घमित्रेण

(C) पुष्यबुद्धिना

(D) अश्वघोषेण

